॥ एकश्लोकि रामायणम् १ ॥

आदौ रामतपोवनादिगमनं हत्वा मृगं काञ्चनं  var  पूर्वं
वैदेहीहरणं जटायुमरणं सुग्रीवसम्भाषणम् ।
वालीनिर्दलनं समुद्रतरणं लङ्कापुरीदाहनं ( var  वालीनिग्रहणं)
पश्चाद्रावणकुम्भकर्णहननमेतद्धि रामायणम् ॥  var  कुम्भकर्णकदनं
इति एकश्लोकि रामायणं (१) सम्पूर्णम् ॥

॥ एकश्लोकि रामायणम् २ ॥

रामादौ जननं कुमारगमनं यज्ञप्रतीपालनं
शापादुद्धरणं धनुर्विदलनं सीताङ्गनोद्वाहनम् ।
लङ्काया दहनं समुद्रतरणं सौमित्रिसम्मोहनं
रक्षः संहरणं स्वराज्यभवनं चैतद्धि रामायणम् ॥

इति एकश्लोकि रामायणं (२) सम्पूर्णम् ॥

॥ एकश्लोकि रामायणम् ३ ॥

जन्मादौ क्रतुरक्षणं मुनिपतेः स्थाणोर्धनुर्भञ्जनं
वैदेहीग्रहणं पितुश्च वचनाद्घोराटवीगाहनम् ।
कोदण्डग्रहणं खरादिमथनं मायामृगच्छेदनं
बद्धाब्धिक्रमणं दशास्यनिधनं चैतद्धि रामायणम् ॥

इति एकश्लोकि रामायणं (३) सम्पूर्णम् ॥